

## गीतामृतम्

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः।।

अस्मिन् पाण्डव सैन्ये पराक्रमवान् युधामन्युः वीरः उत्तमौजः सुभद्रापुत्रः अभिमन्युः, पञ्चपाण्डवाः। एते सर्वे महारथाः शौर्ये भीमार्जुनं समानाः।

(भगवद्गीता १/६)

## जगन्नाथाष्टकम्

भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे
दुकूलं नेत्रान्ते सहचरकटाक्षं विदधते।
सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
जगन्नाथः स्वामी नयनपथगामी भवतु मे।।

(श्री जगद्गुरुशङ्कराचार्यकृत जगन्नाथाष्टकस्य देव व्रती टीका)



कृष्णः वेणुं धरति। वेणुधारणन्तु सङ्गीताय भवति। सङ्गीते वेणुं धरन् यदा वादयति तदा वेणुः वामे भुजे निक्षिपति। शिरसि मयूरबर्हं धरति। गोपवेषस्य मयूरधारणं प्रसिद्धिम्। एवमेव श्रोणीतटे पीताम्बरं धरति। स च गोपैः वसति, तैः सह आलापं कुर्वन् कृष्णः मैत्रीभावेन पश्यति इति कृष्णस्य बाह्यशरीरशोभां वर्णयन् तस्य वृन्दावनवासमपि सूचयति। बृन्दावने स्थित्वा अनेका लीलाः दर्शितवान् इति तादृशः जगन्नाथः मम लोचनगोचरो भवतु।

# उत्तरायणपुण्यकालम् उत्तमगतिभ्यः सोपानम्

मकरसंक्रमणकालः आगतः। मनुष्येषु, मनस्सु च आनन्दस्य प्रवृद्धिः जातः। संक्रान्तिवैभवस्य साक्षात्कारः ग्रामेषु एव न, अपि पट्टनेषु अपि दृश्यते। शीताकालीन अग्नयः, गृहाणां पुरतः रंगवल्लयः वीथिपीटिकाः, गोविन्द स्मारकाः कुक्कुटस्पार्धाः स्वादिष्टभोजनानि एवं नानाविधाः क्रियाविशेषाः हृदयं रञ्जयन्ति।

समस्तदेवता स्वरूपः, सर्वलोकप्रत्यक्षदेवः सूर्यः धनूराशितः मकरराश्यां प्रविशतीति कारणात् मकरसंक्रमणं भवति। अनारोग्य-अतिवृष्टि-अनावृष्ट्यादि बाधाभिः व्याप्तस्य दक्षिणायनस्य समाप्तिर्भूत्वा आरोग्य सस्यपूर्णस्य उत्तरायणस्य प्रारम्भः। अस्मिन् संक्रमणदिने भवति। एवञ्च अस्मात् संक्रान्तिपर्वदिनात् सूर्यः उत्तरदिशि स्थितेभ्यः ऊर्ध्वलोकवासिभ्यः अन्धकारं (अज्ञानं) निवर्तयन्, प्रकाशस्य (ज्ञानस्य) प्रदानपुरस्सरं सञ्चरणं करोतीति अतः उत्तरायणमिदं बहुपुण्यप्रदामिति ज्येष्ठाः भावयन्ति। अत एव भीष्माचार्यः उत्तरायणागमन पर्यन्तं प्राणान् निरुद्ध्वानिति भारतं स्पष्टयति। सारस्तावत् मकरसंक्रान्तिकालः सस्यश्यामलयुतः, शान्तिप्रदाता, आनन्दभरितः इति वक्तुं शक्यते।

अस्मिन् उत्सवक्रमे 'कनुम' इति उत्सवः प्रत्येकतया गोमातुः सम्बन्धितः। सृष्टेः प्रधानकारणं गौः। सा इयं जगन्माता, सर्वाभीष्ट प्रदायिनी। गोस्पर्शनेव सर्वतीर्थस्नानफलं समस्तदेवसेवा फलं प्राप्यते। एवं रूपी गोः परिरक्षणार्थं ति.ति.देवस्थानं नानाविधाः प्रकल्पाः प्रकल्प्य गोसम्पदायाः रक्षां करोति। वयमपि गवां पूजनं, रक्षणं च कृत्वा तरामः।

देशस्य वैभवार्थं बालकेषु मानवमूल्य संवर्थनं अस्यावश्यकम्। तिरुमल तिरुपति देवस्थानम् अस्यां दिशायाम् अग्रे गच्छत् अस्ति। बालेभ्यः प्रत्येकतया 'बालसप्तगिरि' इति विंशति पुटानां अनुबन्धं प्रतिमासे आनेतुम् ति.ति.दे निर्णयं अश्वीकरोत्। दाससाहित्य, आल्वार् साहित्य, हिन्दू देवतानांविषये, बालनीति, चित्रकथ, प्रश्नावली, चित्रलेखनं इत्यादि बालभाषायां 'बालसप्तगिरि' आगच्छति। बाल बालिकासु संस्कृतेः उपरि धर्मोपरि, पुराणोपरि, भगवतोपरि, ज्येष्ठानां उपरि अवगाहनां कारयतुम्, आध्यात्मिक आलोचनाः प्रवर्धीयितुं च 'बालसप्तगिरिं' प्रारब्धं अकरोत्। मातापितरौ अपि स्वबालेषु पुराण, इतिहासानां उपरि ज्ञानं प्रवर्धयुत तेभ्यः सप्तगिरि मासपत्रिकायां आगम्यमान बालल पुटान् पठितुं प्रोत्साहान् कुर्युः। भवन्तः अपि पठित्वा तेभ्यः आध्यात्मिकमूल्यानां उपरि अभिरुचिं प्रवर्दयन्तु।

पर्यावरणं दृष्टिपते स्थाप्य प्लास्टिक् स्यूतान् निवार्य कर्गदस्यूतेषु 'सप्तगिरिं' भक्तेभ्यः प्रापयति। पाठकाः एनं परिवर्तनं स्वागतं कुर्युः इति आकांक्ष!

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-१०

# सप्तगिरिः

## जनवरि-२०२०

श्रीविकारिनामसंवत्सरस्य पुष्यशुक्ल षष्ठि तः माघ शुक्ल षष्ठि पर्यन्तम् - १९४१





मुखचित्रम् – श्रीमहाविष्णुः

अन्तिमरक्षापुटः – श्रीहरिहृदयनिवासिनी

गौरवसम्पादकः-
श्री अनिल्कुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

सङ्केतः
प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते संपर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# मकरसंक्रान्तिः

- डा. एन्.उमादेवी
चरवाणि - ९९५१७३४४९४

सकल जनानां सर्व संपत् प्रदः सकल सौभाग्यदायकः सत् संतान जनकः नरकलोक वासिनां स्वर्गलोक प्राप्ति दायकः संक्रान्ति महोत्सवः तत्संबद्धाः भोगि महोत्सव संक्रमण तर्पण दान अनडुहुत्सवाः (कनुमपंडुग) अथर्ववेदे जयसिंहकल्पद्रुमे, चतुर्वर्गचिंतामणौ च स्पष्टीकृताः आसन्।

**भोगिमहोत्सवः** -चान्द्रमानं अनुसरन्तः जनाः सौरमानरीत्या आचर्यमाणेषु उत्सवेषु (पर्वसु) अयं उत्सवः एकः भवति। तेलुगु मातृभाषावद्भिः आचार्यमाण उत्सवादिषु अयं उत्सवः तिथि प्रधानः न भवति। अयं उत्सवः दक्षिणायनस्य धनुर्मासस्य च अन्तिमेदिने प्रवर्तते। मकर संक्रमणस्य पूर्वदिने भोगि महोत्सवः प्रचलति। भोगि शब्दस्य नामकरणे कारणं एवं वक्तुं शक्यते। कर्षकाणां विविधधान्यानां फलसमृद्धिः भोगि महोत्सवात् पूर्वमेव गृहान् प्रत्यागच्छति। कर्षकाः व्यवसायकर्माणि परिसमाप्य भोगि समये सुखेन कालयापनं कुर्वन्तः विश्रान्तिं स्वीकुर्वन्ति। तैः कृतस्य प्रयत्नस्य फलं विविध धान्यरूपेण लब्धं, तेषां धान्यानां गृहेषु उपयोग द्वारा विपण्यां विक्रयण द्वारा कर्षकाः भोग भाग्यानि अनुभवन्तीति कारणात् अस्य महोत्सवस्य 'भोगि' इति नाम प्रसिद्धं अभूत्। अर्थात् भोगि महोत्सवः सुखानुभवस्य आलम्बनं भवति इति ज्ञायते। उन्ड्राल्लतद्दि पर्वणः पूर्वदिनस्य 'उन्ड्रल्लतद्धि भोगि' इति व्यवहारः आन्ध्रराष्ट्रे प्रसिद्धः वर्तते। एवमेव भोगि महोत्सवस्यापि मकरसंक्रान्तेः पूर्वदिनं इत्यर्थोपि वक्तुं शक्यते।

**भोगिपीडा परिहारः** - भोगिमहोत्सवदिने ब्राह्मी मुहूर्ते एव सर्वे उत्थाय अभ्यंगन स्नानं कुर्वन्ति। अनेन स्नाने भोगिपीडापरिहारः भवतीति जनानां विश्वासः। अनेक प्रान्तेषु बालानां, बालिकानां च स्नान नूतन वस्त्र धारणानन्तरं मध्याह्नकाले भोगि फलानां शिरस्सु समर्पणं कुर्वन्ति। बालबालिकानां शिरस्सु भोगिफल समर्पणं दृष्टिदोष परिहारार्थं क्रियमाणं कर्म इति ज्ञायते। बालबालिकाः आसने उपवेश्य स्त्रियः तासां शिरस्सु भोगिफलानि समर्पयन्ति। तत्र बदरीफलानि, इक्षुखण्डाः, पुष्पाणि, लोह प्रतिमाः



(धनरुपेण) सन्ति। एवं प्रकारं भोगिफलानां समर्पणेन बालबालिकानां दृष्टिदोषपरिहारः आयुर्वृद्धिकरश्च भवतीति जनानां विश्वासः। अस्मिन् दिने ब्राह्मीमुहूर्ते आन्ध्रराष्ट्रस्य अनेकप्रान्तेषु काष्ठैः अग्निज्वालनं कुर्वन्ति। अस्य ज्वलनस्य ''भोगिमंटलु'' इति व्यवहारः वर्तते। तत्र अन्यः सम्प्रदायः दृश्यते - धनुर्मासस्य केषुचित् दिनेषु कन्यकाः गोमयेन पिण्डान् निर्मिमते। आन्ध्रभाषायां तेषां पिण्डानां ''गोब्बिल्लु गोव्विपिडकलु'', इति व्यवहारः वर्तते। तत्र निर्मिताः गोब्बिपिडकलु भोगि ज्वालने उपयुद्यन्ते। आन्ध्रराष्ट्रस्य अनेक प्रान्तेषु (नगरेषु, ग्रामेषु) हरिदासाः इति नाम्ना केचित् भगवत् भक्ताः (सातानि वैष्णवाः) धनुर्मासस्य त्रिंशत् दिनेषु पौराणिकवेषं धृत्वा सिरसि एकं लोहपात्रं निधाय प्रतिगृहं हरि संकीर्तनानि गायन्तः भिक्षाटनं कुर्वन्ति। तत्र विद्यमानाः गृहस्थाः तेषां हरिदासानां तण्डुल धान्यादिकं प्रयच्छन्ति। अद्यापि अयमाचारः तत्र तत्र नगरेषु ग्रमेषु च दरीदृश्यते।

**मकरसन्क्रान्तिः -** मकरसन्क्रान्ति दिने श्रीरामपूजां कृत्वा उपवासं करणीयमिति चतुर्वर्गचिन्तामणौ उक्तम्। संक्रान्ति दिनादारभ्य उत्तरायण पुण्यकालः आगच्छति। भगवान् सूर्यः आकाशे उत्तरस्यां दिशि सञ्चरति। उत्तरायणं देव कार्याणि कर्तुं योग्यः कालः भवति। उत्तरायणे मृताः जनाः पुण्यात्मानः सन्तः महिमानं प्राप्य सूर्य सायुज्यं प्राप्नुयुः इति वेदवचनम्। एकस्मिन् वत्सरे आगतेषु द्वादश संक्रमणेषु मकरसंक्रमणं (संक्रान्तिः) अतीव प्रसिद्धं वर्तते, कुत इति चेत् अस्मिन् मकरसंक्रमण दिने उत्तरायण पुण्यकालः आरभ्यते। भोगि, संक्रमण, कनुम दिनेषु आन्ध्रराष्ट्रे स्वेषां गृहाणां पुरतः प्रातःकाले एव गोमयेन अलङ्कृत्य, गोमयेन पिण्डान् कृत्वा (गोब्बिल्लु) अनेक विधाभिः रंग वल्लीभिः अलङ्कुर्वन्ति। संक्रान्ति महोत्सवस्य त्रिष्वपि दिनेषु प्रतिगृहे बालिकाः, स्त्रियः विविध देवतामूर्तीः, वृक्ष, फल पुष्पादीनि स्थापयन्ति। आन्ध्रभाषायाम् अयं आचारः ''बोम्मलकोलुवु'' इत्यभिधीयते त्रिष्वपि दिनेषु प्रतिगृहे स्त्रियः देवतामूर्तीनां पूजां कृत्वा परिसर गृहेषु स्थितानां कन्यकानां स्त्रीणां च फलपुष्पादीनि प्रयच्छन्ति। संवत्सरस्य षण्मासाः दक्षिणायनं षण्मासाः उत्तरायणं भवति। उत्तरायणकाले एव ज्योतिषशास्त्ररीत्या विवाह उपनयनादि शुभकार्याणि कर्तव्यानि। उत्तरायणे ये मरणं प्राप्नुवन्ति ते स्वर्गलोकं गमिष्यन्ति। उत्तरायण पुण्यकाले मरणं पुण्यं आचरितवतामेव सम्भवति। मकरसंक्रान्ति महोत्सवः अतिप्राचीन इति ज्ञायते। अस्मिन् दिने गृहस्थाः मृतानां पित्रुवंशीयानां मातृवंशीयानाञ्च प्रीत्यर्थं तर्पणादिकं कुर्वन्ति, ब्राह्मणानां वस्त्र, दक्षिण, फल, ताम्बूलानां प्रदानेन तानू संत्तोषयन्ति।

ऋषितुल्यः द्रोणाचार्यः भार्यया कृप्या सह एकस्मिन् आश्रमे निवसतिस्म। सा कृपिः गुणवती पतिव्रता आसीत्। एकदा द्रोणाचार्यः किमपि कार्यं कर्तुं बहिः जगाम। आश्रमे कृपिः एकैव बभूव। तस्मिन् समये दुर्वास मुनिः संमिदाहरणार्थं अरण्ये संचरन् आश्रम समीपं गतवान्। आगतं दुर्वासमुनिं कृपिः पूजितवती। अनन्तरं कृपिः ''आवयोः स्थितिः वृद्ध गौरिव वर्तते, आवां अतीव दारिद्र्यं अनुभवावः, आवयोः संतानमपि नास्ति'' इति तयोः दम्पत्योः दुःखं बाधां च मुनि समक्षे प्रकटितवती। तस्याः मृदुवचनैः आतिथ्येन च सन्तुष्टः





श्रीवैशम्पायन उवाच -

दुर्वासमुनिः दयार्द्रहृदयः सन् ''भवती संक्रान्तिमहोत्सवम् आचरतु'' इत्युपदिश्य व्रतविधानं एवमुवाच।

संक्रान्तिपर्वदिने गंगा नद्यां स्नात्वा श्रोत्रियाय ब्राह्मणाय दधि दानं कर्तव्यम् । नन्दराज्ञः भार्या यशोदा एवमेव व्रतं (दधिदानं) आचरित्वा तत् फल रूपेण श्रीकृष्णं पुत्रत्वेन अलभत। श्रीकृष्णः माता पित्रोः दारिद्र्यं दूरीकृत्य पितरं नन्दं गोकुलस्य राजानं कारितवान्कृपिः दुर्वास मुनि द्वारा ज्ञातं मकरसंक्रान्ति व्रतमाचरित्वा दुर्वासमुनये दधि दानंकृत्वा व्रतं परिसमापितवती। अचिरकालादेव व्रतप्रभावात् दैवानुग्रहात् कृपेः अश्वत्थाम नाम्ना एकः पुत्रः संजातः। अश्वत्थाम माता पित्रोः सर्वाः बाधाः दूरीकृत्य सन्तोषं जनयामास।

**अनडुहुत्सवः (कनुम)-**



मकरसंक्रान्तेः अनन्तरदिने क्रियमाणः महोत्सवः 'कनुम' इति नाम्ना व्यवह्रियते कनुमदिने जनाः पशूनां पक्षिणाञ्च पूजाः कुर्वन्ति। अयं कनुम महोत्सवः वेदकालादपि आचर्यते इति ज्ञायते। वृषभोत्सव विषयः 'अनडुहुत्सवः' इति नाम्ना अथर्ववेदे वर्तते। अस्य उत्सवस्य विधि निषेधाधिकं श्रौतसूत्रेषु दृश्यते। अमुम् उत्सवं कर्षकाः गोपालाः विविध कुलवृत्तिषु स्थिताः जनाः आचरन्ति। इदानीन्तन काले कनुमदिने गोपूजाम् आन्ध्रराष्ट्रीयाः तथा तमिळनाडुराष्ट्रीयाश्च कुर्वन्ति।

प्राचीनकाले व्यासवाल्मीकादयः महर्षयः इतिहास पुराणागम ग्रन्थ रचनाभिः जनेषु ज्ञान वैराग्य भक्ति भावान् उत्पादयामासुः। प्रतिसंवत्सरं पुष्यमासे मकरसंक्रान्ति महोत्सवः प्रचलति। सूर्यस्य मकरराश्यां प्रवेशः एव मकरसंक्रान्तिः, तत्पूर्वदिने भोगि महोत्सवः संक्रान्तेः अपरदिने अनडुहुत्सवः (कनुम महोत्सवः) प्रवर्तते। मकरसंक्रान्तिमहोत्सवस्य विशेषाः साङ्गोपाङ्गं अथर्ववेदे जयसिंहकल्पद्रुमे, चतुर्वर्गचिन्तामणौ च अभिवर्णिताः सन्ति। तत्र भोगिमहोत्सव, संक्रमण, तर्पण, दान, अनडुहुत्सवाः सम्यक् कथिताः, तेषां आचरणेन जनेषु भक्तिभावः उत्पद्यते।

प्राचीनकाले जनाः भोगि, मकरसंक्रान्ति, अनडुहुत्सव (कनुम) दिनेषु भोगिमहोत्सव, संक्रमण, तर्पण, दान अनडुहुत्सवानां करणेन पूर्वीकाणां जनानां स्वर्गलोकप्राप्तिः, तस्मिन्नेवदिने दुर्वासमुनिना कृपये (द्रोणाचार्यभार्यायै) प्रोक्तस्य संक्रमण व्रतस्य आचरणेन जनाः इहलोकसुखं, एश्वर्यं, विजयं, कीर्तिञ्च अलभन्त, इदानीन्तन कालेऽपि लभन्ते, लभयिष्यन्ते च।

**व्रतवैषिष्ट्यम् आचरणफलञ्च -** कलियुगे एतावत् कालपर्यन्तं स्थितान् भक्तजनान् विशेषतः दुर्वासमुनि द्रोणाचार्य कृपीः दृष्टान्तत्वेन स्वीकृत्य इदानीन्तनकालिकैः जनैरपि मकरसंक्रमण व्रतं आचरणीयं भवति। भक्तिश्रद्धाभ्यां तस्य व्रतस्य आचरणेन सर्वेषां जनानां इष्टकाम्यार्थसिद्धिः भवति भविष्यति च।





# क्षीरसागरमन्थनम्

- श्रीमति माधवी वेंङ्कटेशः साहित्याचार्यः
चरवाणि - ७३७६७४८६३२

क्षीरसागरस्य मन्थनात् प्राप्तस्य, भगवता धन्वन्तरिणा आनीतस्य, जरामृत्युविनाशकस्य अमृतस्य सत्पात्रेषु वितरणार्थं भगवाता नारायणेन स्वीकृतं स्त्रीरूपमेव मोहिन्यवतारः।

एकदा दुर्वास मुनिः श्रीवैकुण्ठलोकात् आगच्छन् आसीत्। मार्गे स मुनिः हस्त्यारुढमिन्द्रं दृष्टवान्। अनन्तरमिन्द्राय दुर्वाससा भगवतः प्रसादरूपेण एका माला प्रदत्ता। देवेन्द्रस्तु ऐश्वर्यमदवशात् तां मालां हस्तिनः मस्तके क्षिप्तवान्, हस्तां तु शुण्डादण्डेन मालां मस्तकादपसार्य पद्भ्यां विनाशितवान्। भगवत्प्रसादस्य एतादृशीमवमननां दृष्ट्वा दुर्वासा मुनिः क्रुद्धो भूत्वा एवं रूपेण देवेन्द्रं शप्तवान् - 'अचिरेण सराज्यस्त्वं श्रीहीनो भव' इति।

दुर्वाससः शापस्य सर्वेषां देवानामुपरि प्रभावः आसीत्। असुराः तीक्ष्णैरस्त्रैः देवान् पराजितवन्तः। बहवः देवाः रणभूमौ पतिताः अभवन्, पुनरुत्थातुमपि नाशक्नुवन्। यागादिधर्मकर्मणामपि न्यूनता सञ्जाता। एतादृशीं दुर्दशां दृष्ट्वा इन्द्रादयः देवताः विचार्य, समस्यायाः समाधानार्थं ब्रह्माणमुपासरन्। ब्रह्मा च तान् सर्वान् श्रीमन्नारायणस्य शरणं गन्तुमादिष्टवान्।



एवं ब्रह्मणा आदिष्टाः ब्रह्मणा शिवेन च साकं सर्वे देवाः श्रीवैकुण्ठं प्रति अगच्छन्। तत्र सर्वाभरणभूषितस्य, सर्वशक्तिमयस्य, द्युतिमतः भगवतः श्रीमन्नारायणस्य सर्वे दर्शनमकुर्वन्, विविधप्रकारैः भगवतः स्तुतिमकुर्वन्। अनन्तरं देवानां ब्राह्मणानां च कल्याणार्थं तमेव उपायमपृच्छन्।

भगवान विष्णुः तेषां कल्याणार्थमेव मुक्तवान्-भवतां कल्याणार्थम् अयमेव उपायोऽस्ति। इदानीमसुराः कालेनानुगृहीताः सन्ति। यावत् भवतामभ्युदयस्य समयो नागच्छति, तावत् भवद्भिः सावधानैः भवितव्यम्। अतः शत्रुभूतैरपि दैत्यैः सह सन्धिं कुर्वन्तु। सन्धिं विधाय अचिरादेव अमृतोरद्धारणार्थं प्रयत्नं कुर्वन्तु। अमृतरसपानेन मरणशीलोऽपि अमरो भवति। क्षीरोदधौ पूर्वं सर्वविधानि तृणानि, लताः, ओषधीः च क्षिपन्तु। अनन्तरं मन्दरपर्वतम् मन्थनदण्डरूपेण, वासुकिं च मन्थनरज्जुरूपेण स्वीकृत्य समुद्रस्य मन्थनं कुर्वन्तु। समुद्रात् यानि वस्तूनि प्राप्यन्ते तेषु लोभः भवद्भिः न कार्यः। दैत्याः यदिच्छन्ति, तत् तेभ्यो दातत्यम्। शान्त्यैव सर्वं कार्यमस्माभिः साधनीयम्। सर्वप्रथमं समुद्रात् कालकूटविषम् एव सम्भविष्यति, तस्मात् न केनापि भेतव्यम्। अन्ते कार्यस्य सत्फलं भवतामेव स्यात्, असुराः तु क्लेशभाज एव भविष्यान्ति इति।

एवमुक्तप्रकारेण देवाः दैत्यैः सह सन्धिं विधाय समुद्र मन्थनार्थं सन्नाहमकुर्वन्। दैत्याः

स्वशक्त्या मन्दराचलमुत्पाट्य समुद्रतटं नेतुं प्रयासमारभन्त, परन्तु इन्द्रादयो देवाः बलिप्रभृतयो दैत्याः सर्वेऽपि तमतिबृहदाकारं मन्दराचलमानेतुं नाशक्नुवन्। मार्गे एव स पर्वतः भारोद्वहनासामर्थ्यात् देवैः असुरैश्च पातितः। पतनसमये बहवः देवासुराः विकलाङ्गाः अभवन्। ते सर्वे भग्नमनसः सञ्जाताः। एतदृष्ट्वा गरुडारूढो हरिस्तत्र प्रकटोऽभवत्, अमृतमय्या दृष्ट्या च देवान् निर्व्रणानकारयत्। अनन्तरमनायासेनैव मन्दरं बाहुभ्यामुत्थाप्य गरुडस्योपरि स्थापयित्वा स्वयमपि गरुडे आरुह्य, समुद्रतटं गत्वा तत्र मन्दरागीरिमवरोपयामास।

अनन्तरं सर्वे मन्थनार्थमेकत्र सिद्धाः अभवन्। भगवान् हरिः देवैः सह वासुकेः मुखभागस्य समीपे आगतवान् दैत्याश्च पुच्छभागे आगताः। दैत्याः देवान् हरिं च दृष्ट्वा एवमचिन्तयन् 'सर्पाणां पुच्छन्तु अमङ्गलकरमङ्गम्। अतोऽस्माभिरेव वासुकेः मुखं गृहीतव्यम्' इति। अनन्तरं दैत्यानामनुरोधेन देवाः पुच्छसमीपं दैत्याश्च वासुकेः मुखभागस्य समीपमागत्य मन्थनमारभन्त।

मन्थनात् प्रथमं कालकूटं प्राप्तं, यल्लोककल्याणार्थं महादेवेन भक्षितम्। अनन्तरं समुद्रात् क्रमेण कामधेनुः, उच्चैःश्रवा नामाश्वः, कौस्तुभमणिः, कल्पवृक्षः अप्सरसः लक्ष्मीः, कमलनयनी वारुणी देवीं चेति लब्धाः, येषां श्रीहरिणा, देवैः दैत्यैश्च इच्छानुसारं ग्रहणं कृतम्।

अनन्तरं पुनर्मन्थनेन अलौकिकः अद्भुतः सुन्दरः पुरुषः प्रकटोऽभूत्। स च साक्षात् भगवतो विष्णोः अंशः, आयुर्वेदप्रवर्तकः, वलयभूषितहस्तः, एकस्मिन् हस्ते अमृतकलशं धृत्वा आविरभूत्। दैत्याः झटिति धन्वान्तरेर्हस्तात् अमृतकलशमपाहरन्। देवताः सर्वे खिन्नाः भूत्वा श्रीमन्नारायणस्य शरणमगच्छन्। भगवान् च स्वमायया देवतानां साहाय्यं कर्तुं आश्वासनं प्रदत्तवान्।

अमृतकलशं गृहीत्वापि परस्परमीर्ष्यावशात् दैत्येषु परस्परं कलहः सञ्जातः। दुर्बलाः दैत्याः सर्वेषां यत्नेनैव अमृतं। प्राप्तम् अतः सर्वे देवाः, सर्वे दैत्याश्च अमृतस्य भागमर्हन्ति' इति वक्तुमारभन्तं।

एतंन्मध्ये श्रीहरिः अतिसुन्दरं कन्यारूपं धृतवान्। सर्वेऽवयवाः सुन्दराः सर्वाण्यङ्गानि सुन्दरैः आभरणैः भूषितानि, आकर्षकाणि चासन्। सव्रीडेन स्मितेन, भ्रूविलासत्यहितेन अवलोकनेन च मोहिनीरूपधारी भगवान् हरिः दैत्येश्वरान् आकृष्टवान्। कलहे मग्नाः दैत्याः आयान्तीं सुन्दरीं विलोक्य विस्मिताः अभवन्। ते तां कन्यां विविधैः सुन्दरैः वाक्यैः स्तुत्वा, तेषां कलहस्य निवारणं कर्तुं प्रार्थयामासुः। मोहिन्याः हस्ते एव अमृतकलशं च ददुः।

अनन्तरं दिनमेकं उपवासं कृत्वा, देवाः दैत्याश्चेति सर्वे स्नात्वा अनलं हुतवन्तः। गोभ्यः, ब्राह्मणेभ्यः सर्वभूतेभ्यश्च योग्यतानुसारं धान्य धनादिकं दत्तवन्तः। अनन्तरं सुन्दराणि वस्त्राणि आभरणानि च धृत्वा सभायां कुशासनेषु अमृतपानार्थमुपविष्टाः। एतदनन्तरमेव मोहिनी सुन्दरवस्त्रैः आभरणैश्च भूषिता, अमृतकलशं गृहीत्वा सभां प्राविशत्।

सा च स्वास्मितेन सर्वान् विमोहयन्ती, दैत्यान् वञ्चयन्ती, देवान् अमृतं पाययितुं प्रारभत। मोहिन्यां प्रेमवशात् दैत्याः वाञ्चिताः अपि तूष्णीमुपविष्टाः आसन्।

यदा भगवान् देवेभ्यः अमृतं पाययन् आसीत् तदानीं मोहिन्यां अविश्वस्तः राहुः देवानां मध्ये आगत्य देववेषं धृत्वा अमृतं पीतवान्। परन्तु अनन्तरमेव सः दैत्यः इति सोमसूर्याभ्यां सूचितम्। अमृतं पाययन्नेव स भगवान् राहोरुपरि चक्रं क्षिप्तवान्। अमृतस्य संसर्गाभावात् तस्याधोभागः नीचैरपतत्, शिरश्च अमरमभूत्। यदा सर्वे देवाः अमृतं लब्धवन्तः सर्वेषां दैत्येन्द्राणां पुरत एव भगवता मोहिनीरूपं विसृष्टम्।

**इत्थं देवाः असुराश्चोति सर्वेऽपि एकत्र, एकदा, एकस्यैव वस्तुनः कृते एकमेव कर्म कृतवन्तः परन्तु फलप्राप्तौ महान् भेदः सञ्जातः। देवताः श्रीमन्नारायणस्य चरणमाश्रितवन्तः, अतः स्वकर्मणः सत्फलं प्राप्तवन्तः। असुराः अपि महता प्रयासेनैव मन्थने साहाय्यमकुर्वन्, परन्तु श्रीमन्नारायणचरणात् विमुखीभूताः ते अमृतं न प्रापुः।**





जनवरि - २०२० श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | 31 | |

फेब्रवरि-२०२० श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | | | | | 1 |
| 2 | 3 | 4 | 5 | 6 | 7 | 8 |
| 9 | 10 | 11 | 12 | 13 | 14 | 15 |
| 16 | 17 | 18 | 19 | 20 | 21 | 22 |
| 23 | 24 | 25 | 26 | 27 | 28 | 29 |

डिसेम्बर्-२०२० श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | 31 | | |

## जनवरि - २०२०

०१. नूतन आंग्लसंवत्सरः
०६. वैकुण्ठैकादशी
०७. स्वामिपुष्करिणीतीर्थमुक्कोटि
१४. भोगि, भोगि तेरु
१५. मकरसङ्क्रान्तिः
१६. कनुम,
श्रीगोदादेवीपरिणयोत्सवः
२४. श्रीपुरन्दरदासानां आराधनम्
२६. भारत गणतन्त्रदिनोत्सवः

## फेब्रवरि-२०२०

०१. रथसप्तमिः
०५. भीष्मेकादशिः
०९. श्रीरामकृष्णतीर्थमुक्कोटि
१४-२२. श्रीनिवासमङ्गापुरम्
श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
१४-२३. तिरुपति-श्रीकपिलेश्वरस्वामिनः ब्रह्मोत्सवः
२१. महाशिवरात्रिः

## मार्च्-२०२०

०२-१० तरिगोण्ड श्रीलक्ष्मीनरसिंहस्वामिनः ब्रह्मोत्सवः
०५-०९ तिरुमलक्षेत्रे प्लोवत्सवः
०९- कुमारधार तीर्थतमुक्कोटि
१०.श्रीलक्ष्मीजयन्तिः
२१. अन्नमाचार्यवर्धन्तिः
२३-३१. तिरुपतिस्थ
श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः
२३-२७.नागलापुरम्- श्रीवेदनारायणस्वामिनः
प्लवोत्सवः
२५. श्रीशार्वरिनामसंवत्सराम्भः (युगादिः)



### ऐप्रल्-२०२० — श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | | |

### मे-२०२० — श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| 31 | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |

### जून् -२०२० — श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | | | | |

## ऐप्रल्-२०२०

०२-१० ओण्टिमिट्ट श्री कोदण्डरामस्वामिनः ब्रह्मोत्सवः
०२. श्रीरामनवमिः
०३. तिरुपति श्रीकोदण्डरामस्वामिनः कल्याणोत्सवः
०५-०७. तिरुमल श्रीस्वामिनः वसन्तोत्सवः
०७. तुम्बुरु तीर्थमुक्कोटि
१४. तमिळनूतनसंवत्सरारम्भः,
डा.बि.आर्.अम्बेद्कर्जयन्तिः
२५.परशुरामजयन्तिः, २६.अक्षय तृथीया
२७.शङ्करजयन्तिः, २८. रामानुजजयन्तिः

## मे-२०२०

०१-०३ तिरुमल
श्रीपद्मावतीश्रीनिवासपरिणय महोत्सवः
०५-०८. तिरुचानूरु
श्रीपद्मावतीदेव्याः वसन्तोत्सवः
०५-१३.नागलापुरम् श्रीवेदनारायणस्वामिनः ब्रह्मोत्सवः
०६. नरसिंह जयन्तिः, तरिगोंड वेङ्गमाम्बजयन्तिः
०७. कूर्मजयन्तिः, ०८.अन्नमाचार्य जयन्तिः
१२. तिरुपति गङ्गजातरः
१५-२३. कार्वेटिनगरम्
श्रीवेणुगोपालस्वामिनः ब्रह्मोत्सवः
१७. हनुमज्जयन्तिः
२८- जून् ०५. तिरुपति
श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवः

## जून् -२०२०

०१ तः ०५ तिरुचानूरु
श्रीपद्मावतीदेव्याः प्लवोत्सवः
०२-१०. हृषीकेष्/नारायणवणम्
श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
०२-१०. अप्पलायगुण्ट श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः
ब्रह्मोत्सवः
०४-०६. तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकः
२५-२७. श्रीनिवासमङ्गापुरम्
श्रीकल्याणवेङ्कटेश्वरस्वामिनः साक्षात्कार वैभवम्



**जूलै - २०२०** श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | 31 | |

**आगस्ट् - २०२०** श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| 30 | 31 | | | | | 1 |
| 2 | 3 | 4 | 5 | 6 | 7 | 8 |
| 9 | 10 | 11 | 12 | 13 | 14 | 15 |
| 16 | 17 | 18 | 19 | 20 | 21 | 22 |
| 23 | 24 | 25 | 26 | 27 | 28 | 29 |

**सेप्टम्बर् -२०२०** श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | | | |

## जूलै - २०२०

०१-०३ तिरुपति श्रीगोविन्दराजस्वामिनः ज्येष्ठाभिषेकः
०१-०४. तिरुपति-श्रीकपिलेश्वरस्वामिनः पवित्रोत्सवः
०५. गुरुपूर्णिमा, आषाढपूर्णिमा, व्यासपूर्णिमा
१५-१८. तिरुपति श्रीकोदण्डरामस्वामिनः पवित्रोत्सवः
१६. तिरुमलक्षेत्रे स्वामिनः आणिवर आस्थानम्
२४. नागचतुर्थी २५. गरुडपञ्चमी
जूलै २९तः आगष्ट् ०१ पर्यन्तम्
तिरुमल श्रीस्वामिनः पवित्रोत्सवः
३१.वरलक्ष्मीव्रतम्

## आगस्ट् - २०२०

०३. श्रीविखनसाचार्यजयन्तिः,
श्रीहयग्रीवजयन्तिः
०४. गायत्रीजपः
१२. गोकुलाष्टमी
१५. स्वातन्त्र्यदिवसः
२०. बलरामजयन्तिः, २१. श्रीवराह जयन्तिः
२२. विनायकचतुर्थी
३०तः सेप्टेम्बर् ०२ पर्यन्तम् तिरुचानूरु
श्रीपद्मावतीदेव्याः पवित्रोत्सवः

## सेप्टम्बर् -२०२०

०१.अनन्तपद्मनाभ व्रतम्
०५.गुरुपूजोत्सवम्

१९-२७ तिरुमल श्रीवेङ्कटेश्वरस्वामिनः
वार्षिक ब्रह्मोत्सवः
२३. तिरुमल स्वामिनः गरुडोत्सवः
२४. तिरुमल स्वामिनः सुवर्णरथरङ्गडोलोत्सवः



**अक्टोबर्-२०२०** श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | | | 1 | 2 | 3 |
| 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 |
| 25 | 26 | 27 | 28 | 29 | 30 | 31 |

**नवम्बर् -२०२०** श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 |
| 8 | 9 | 10 | 11 | 12 | 13 | 14 |
| 15 | 16 | 17 | 18 | 19 | 20 | 21 |
| 22 | 23 | 24 | 25 | 26 | 27 | 28 |
| 29 | 30 | | | | | |

**डिसेम्बर्-२०२०** श्रीवेङ्कटनिवासाय श्रीनिवासाय मंगळम्!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | 31 | | |

## अक्टोबर् - २०२०

०२. गान्धीजयन्तिः
१६-२४.तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवः
२०. तिरुमल श्रीस्वामिनः गरुडसेव
२१. तिरुमल श्रीस्वामिनः पुष्पकविमानः,
सरस्वातीपूजा
२३. तिरुमल श्रीस्वामिनः स्वर्णरथोत्सवः
२४. दुर्गाष्टमी, महर्नवमी
२५. विजयदशमी

## नवम्बर् -२०२०

११-१९. तिरुचानूरु श्रीपद्मावतीदेव्याः ब्रह्मोत्सवः
१४. नरकचतुर्दशी,
दिपावली अमावास्य
१४. बाललदिनोत्सवः
१५. श्रीकेदारगौरीव्रतम्
२०. तुंगभद्रानदी पुष्कर प्रारंभः
२१. तिरुमलक्षेत्रे स्वामिनः पुष्पयागः
२५-२९. नारायणवनम्
श्रीकल्याणवेङ्कटेश्वरस्वामिनः प्लवोत्सवः
२७. कैशिकद्वादशि आस्थानम्

## डिसेम्बर् - २०२०

०३. तिरुपति
श्रीकपिलेश्वरस्वामिनः लक्षबिल्वार्चनम्
१२. धन्वन्तरीजयन्तिः
१६. धनुर्मासारम्भः
२५. वैकुण्ठैकादशी, गीताजयन्तिः
२५-२९. तिरुपति
श्रीकपिलेश्वरस्वामिनः प्लोवत्सवः
२६. स्वामिपुष्करिणी तीर्थमुक्कोटि
२९. श्रीदत्तजयन्तिः

# नायकत्व लक्षणानि



- डा. सि.आदिलक्ष्मीः, चरवाणी - ९९४९८७२१४९

प्रति मानवः यत्किमपिस्थितौ नायकः भवत्येव। एकः स्वकीय गृह परिधौ नायकः भवितुमर्हति, अन्यः स्वकीय वंशपरिधौ नायकः भविष्यति। अपरः स्वपरितः स्थितौ संघपरिधौ नायकः भवितुमर्हति। अन्यः देशस्थायिनि अथवा प्रपञ्चस्थायिनि नायकः भविष्यति परन्तु नायकाभिधेयिनां सर्वेषां कानिचन लक्षणानि समानरूपेण भवन्ति। अवश्यं कानिचन लक्षणानि तेषां भवन्ति। जन्मतः नायकः न कोऽपि भवति। परन्तु जन्मतः तस्य नायकः भवितुं आवश्यकानि योग्य लक्षणानि संभवन्ति। नायकाभिलषितव्यक्तौ नायकपदव्यां वाञ्छा तीव्रतया भवति। तदेव लक्ष्यत्वेन सः अग्रे चरित्वा सम्यग्मार्गदर्शने स्वकीयलक्ष्यं साधयति।

भगवद्गीतायां नायकत्व लक्षणानि द्वादशाऽध्याये वर्णितमस्ति। तेषु कानिचमात्र चर्चयामः। नायकत्व लक्षणेषु प्रप्रथमः द्वेषः न भवितव्यः। नायकः दशजनानां संमेल्य कार्यं करणीयं भवति। अतः न केनाऽपि द्वेषं न दर्शयित्वा समिष्टितया कार्यं करणीयं भवति। न केवलमेतदपि न अपि तु स्वकीय द्वेषभाविनेनैवानुयायिनां गौरवाभिमानं भवन्ति। द्वितीयं मुख्यलक्षणं स्नेहेन वर्तनीयम्। द्वेषरहतिमेव प्रप्रथम शुभलक्षणम्। इतोऽपि सर्वेषां स्नेहेन वर्तनं द्वितीयं नायकत्वलक्षणं भवति। तदनन्तरमागतः सद्गुणः करुणास्वभावः भवति। एवं नायकस्य स्थितेषु त्रिषु लक्षणेषु मुख्य लक्षणानि त्रिविधजनानां प्रकटितं भवति। शत्रूणपि नायकः न द्वेषयति। शत्रोरपि यत्किमपि गुणमन्वेषणं नायकस्य प्रथमसूत्रं भवति। सः स्वसमानेषु स्नेहं करोति। चतुर्णां सहायं विना न कोऽपि अग्रे गच्छति। पुनः करुणागुणः अल्पेषु दर्शयति। अल्पान् हीनतया नायकः न पश्यति। तेषां सर्वाणि यायावसराणि निर्वहित्वा अभिवृद्धि पथे नेष्यति नयति च। छत्रपतिः शिवाजी महाराजः अष्टादशवत्सरे दण्डयात्रामारभ्य पञ्चाशतिवर्षपूर्ण पर्यन्तं चर्तुशताधिक दुर्गाणि स्वाधीनं कृतवान्। तत्र बहून् स्वयं जितवान्। अवशिष्टानि स्वयं निर्मितवान्। परमत्र शिवाजी महाराजः स्वकीयानुयायिणां सहायेन मेधाविणां धैर्यशालिनां सम्पूर्णप्रोत्साहं दत्वा नूतनदुर्गाणां विजयार्थं स्वतंत्रतया प्रेषयति स्म। ते तत्तत् दर्गान् आक्रम्य विजयं प्राप्य तेरेवाधिपतयः तत्र, तेषां नाम्नैव कीर्तितमपि भवति स्म। एतदेव नायकत्व लक्षणं भवति। थेतत्कार्यं 'अल्पजनोद्दरणे दया भावना' इत्यस्मिनागच्छति।

द्वेषरहितः, समस्तजीवप्रेम भावना करुणा हृदयं, ममत्व राहित्यं, निरहंकारः, सुखदुःखेषु समत्वेन स्थितः मम अत्यन्त प्रियः इति भगवद्गीतायां श्रीकृष्णः कथितः। उपरिवर्णित त्रिभिः लक्षणैस्सह ममत्वराहित्यं, निरहंकारमपि नायकत्व लक्षणान्येव। ममत्वमित्युक्ते 'लोभिः' इत्यर्थः। तेन धर्मनिर्णयं सम्यक् न करोति। तस्य दृष्टिः संकुचितः भवति। एवमेवाहंकारिणामपि विषयं भवति। अतः तेषां दूरे स्थापयति। सुखदुःखेषु समत्वेन वर्तनं नायकस्यावश्यकं सद्गुणं भवति। यत्किमपि कार्ये जयापजयौ, सुखदुःखौ भवन्त्येव। तदानीं तानि समर्थतया प्रतिघटयितुं नायकः अग्रेसरः भवितव्यः। सत्यतया नायकः स्वसाधितेषु विजयेष्वपि स्वानुयायिनामेव कर्तारमिति कथयति। पुनः यत्र कुत्रापि अपजये आत्मानमेव कारणतया भावयति। अतः युवकाः प्रप्रथमतया नायकत्व लक्षणानि अभिवृद्ध्यर्थं प्रयत्नः करणीयः। साधनेनैव समस्तं जगति साधयितुं शक्यते। अतः प्रारम्भादेव नायकत्व लक्ष्यं संस्थाप्य नायकत्वलक्षणानां कृते यत्नः क्रियते चेत् तेरेव स्वयं आगच्छन्ति।

नायकाणां स्थितस्य प्रधान मुख्यलक्षणानां यदि परिशीलयामः तानि सर्वाण्यपि मनः सम्बन्धान्येव। एतद्विषयं स्पष्टतया दृग्गोचरं भवति। अर्थात् नायकः प्रथमतया मनोनिग्रहं करणीयम्। यः नायकः मनोनिग्रहकार्यं साधयति सैव निश्चयेन लोके सुप्रसिद्धः भविष्यति। सैव सर्वेषां प्रशंशार्हः भवति। साधरणतया लोकं सर्वजनोद्धारकं नायकं कृते अन्वेषयति। अतः नायकः भवितुं धैर्यसाहसानां प्रदर्शनं करणीयम्। तेन लोकः भवतः नायकत्वं अङ्गीकरोति। तदर्थमपेक्षितानि लक्षणानि भगवद्गीतायां स्पष्टतया वर्णितानि।



# महाभारते आचार्यकर्तव्यानि

- डा.अजयकुमारनन्दः, साहित्याचार्यः
चरवाणि - ९१८२३४१०५२



महाभारते गुरुशिष्ययोर्मध्ये पितापुत्रसम्बन्धस्य कल्पना कृता अस्ति। अतः अध्ययनातिरिच्य महाभारतकालीनाचार्याणामितोऽपि कानिचन कर्तव्यान्यासन्। महाभारते आचार्यं शिष्यस्य मानसपिता इत्यकथयत्। शान्त्यनुशासनयोः पर्वणोः कथ्यते यत् - मातापितरौ केवलं शरीरं सृजतः। किन्त्वाचार्योपदेशेन ज्ञानरूपद्वितीयजन्म प्रददाति। तज्जन्म सत्यम्, अजरम्, अमरञ्चाभवत्। यथोक्तं भारते -

**शरीरमैतौ सृजतः पिता माता च भारत।**
**आचार्य शास्ता या जातिः सा सत्या साजरामरा।।**
(**महा.भा.अनु.**१०५,१८,१९)

नैतिकदृष्ट्या शिष्यस्य सर्वेषां दोषाणामुत्तरदायित्वमेव आचार्योपरि आसीत्। यथोक्तं पञ्चतन्त्रे -

**अतीतबन्धुनवलध्य शिष्यानाचार्यमागच्छति शिष्यदोषः।।**
(**पञ्चतन्त्र्म्** १-२१)

महाभारतकालीनाः ये आचार्याः अभूवन् तेषामाचार्याणामध्यापनं व्यतिरिच्य नैकान्येव कर्तव्यान्यासन् शिष्यस्य चरित्रोपरि दृष्टिप्रसारणं तदुत्तरदायित्वमासीत्। अतः ते शिष्यमवदन् यत् - कः अभ्यासः कर्तव्यः, कः अभ्यासः नैव कार्यः, कस्मिन् कर्मणि तत्परा प्रदर्शनीया, कस्य कर्मणः उपेक्षा कर्तव्या, स्वस्वास्थ्यं सम्यक्कर्तुं कथं निद्रा कर्तव्या, कथं भोजनं करणीयम्, किदृशं भोजनं कर्तव्यम् केन साकं भोजनं कर्तव्यम् कस्मिन् स्थाने गन्तव्यम् इति। महाभारतस्य शान्तिपर्वणि उक्तमस्ति यत् - माता - पिता - गुरवः यस्य कार्यस्य कृते आज्ञां प्रयच्छन्ति तत्कार्यं धर्मानुकुलं भवतु अथवा धर्मविरुद्धं वा तदवश्यमेव पालयेत्।

यः सत्कर्मद्वारा सत्योपदेशं ददाति यथार्थकथनेन पुत्रमथवा शिष्यं कवचसदृशमाच्छादयति सत्यस्वरूपवेदस्योपदेशं प्रददाति असत्यात् दूरे नाययति तादृशं गुरुं मातापितरौ बुध्येताम्, तस्मै न द्रोहणीयः (महा.भा.१०८.२२)

महाभारते गुरुणां कर्तव्यविषये उक्तं वर्तते यत् - गुरुः शिष्यमात्मोन्नितिपथे नाययेत्। तथा शिष्याणां धर्मः भवति यत् - गुरुणां पूजनं कुर्यात् -

**यथैव ते गुरभिर्भावनीयास्तदा**
**तेषां गुरुवोऽभ्यर्चनीया ।। (महा.भा.शान्ति १०८.२३)**

तथैव उक्तमस्ति यत् - चिरकालं चिन्तयित्वा मित्रतां कूर्यात्। यदि मित्रतां कूर्वन्ति तर्हि तदेव मित्रं नैव त्यजेत्। दीर्घकालं यावत् बृद्धानां सेवा कर्तव्या।

**चिरं वृद्धानुपासीत चिरमन्वस्य पूजयेत्।।**
(**महा.भा.शान्तिः**.२६६-७५)

अतः शिष्यं कथयेत् यत् - अधिकसमयं यावत् पंण्डितैस्सह तिष्ठेत्। तथा शिष्टपुरुषाणां सेवां कूर्यात्। चिरकालं यावत् स्वमनः वशीकूर्यात्।

**चिरमन्वास्य विदुषश्चिरं शिष्टान् निषेव्य च।**
**चिरं विनीय चात्मानं चिरं चात्यनवज्ञताम्।।**
**(महा.भा.शान्तिः २६६.७६)**

स्वस्त्रियामनुरागं कूर्युः -

**स्वदारो निरतो वसेत्।। (महा. भा.शान्तिः ३२६.१७)**

अनुशासणापर्वपर्वणानुसारं कस्यापि वर्णस्य पुरुषः कदापि अन्यस्त्रिभिः सह संसर्गं नैव कूर्यात्।

**परदारा न गन्तव्या सर्ववर्णेषु कर्हिचित्।। (महा.भा.अनु.१०४.२०)**

अपरिचितजनैः साकं कदापि यात्रा नैव कार्या।

**नाज्ञातैः सह गच्छेत्।। (महा. भा.अनु.१०४.२५)**

अन्यैः परिधृतवस्त्रमूपानहश्च नैव परिधरेत्।

**उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत्।।**
**(महा.भा.अनु.१०४.२८)**

मलमूत्रविसर्जनात्परं, मार्गगमनात्परम्, स्वाध्यायभोजनाभ्यां पूर्वं पादं प्रक्षालयेत्।



**कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः।**
**पादप्रक्षालनं कूर्यात् स्वाध्याये भोजने तथा।।**
**(महा. भा.अनु.१०४.३९)**

देवताभ्यः फलम्, दुग्धम्, गोधूमपिष्टखाद्यम्, पूडिकाम्, पायसमित्यादिकं समर्पयेत्। सायं काले मा शयित, नित्यस्नानं विदध्यात्, सदा पूतेन तिष्ठेत्, सूर्योदयात्पूर्वमुतिष्ठेत्, प्रत्यहः प्रातःकाले शयनोत्थापनात्परं मातापितरौ नमस्कूर्यात् तत्परमाचार्यान् अभिवादयेत्, अनेन अभिवादनेन मानवः दीर्घजीवि भवति।

**माता पितरमुत्थाय पूर्वमेवाभिवादयेत्।।**
**(महा.भा.अनु.१०४.४३)**

उत्तरपश्चिमदिशौ शिरः कृत्वा नैव शयित। विद्वत्पुरुषाः पूर्वदक्षिणौ शिरः कृत्वा निद्रां कूर्युः।

**उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च।**
**प्राक्शिरास्तु स्वपेद्विद्वानथवा दक्षिणा शिराः।।**
**(महा.भा.अनु.१०४.४८)**

विद्वत्पुरुषाः नैव कदापि नग्नो भूत्वा स्नानं विदध्युः। भोजनकृतपुरुषाः प्रतिदिनं पूर्वदिशं प्रति मुखं कृत्वा मौनेन भोजनं कूर्युः। तस्थिवान् भूत्वा कदापि मूत्रं नैव विसर्जयेत्।

**मूत्रं नोत्तिष्ठिता कार्यम्।। (महा.भा.अनु.१०४.६२)**

उलग्नो भूत्वा कदापि नैव स्वपेत्।

**स्वप्तव्यं नैव नग्नेन।। (महा.भा.अनु.१०४.६७)**

गुरुभिस्सह कदापि प्रवञ्चना नैव कर्तव्या।

**गुरुणा चैव निर्बन्धो न कर्तव्य कदाचन।।**
**(महा.भा.अनु.१०४.८०)**

गुरुजनान् स्नानात्परमेव नसम्कूर्यात्। यदि नैवाह्वयन्ति कदापि नैव गच्छेत्। परन्तु यज्ञं द्रष्टुं मानवः विना आह्वानेन गन्तुं शक्नुयात्।

**अनिर्मन्त्रितो न गच्छेत्।**
**यज्ञं गच्छेत् च दर्शकः।। (महा.भा.अनु.१०४.९४२)**

इत्यमेव आचार्याः शिष्यान् आहूय सर्वं विषयं बोधयित्वा शिष्यस्य व्यक्तित्वस्य चरित्रस्य सर्वाङ्गिणविकाशाय प्रायतन्त इति।



तेलुगु मूलम् - डॉ.वैष्णवांघ्रिसेवकदासः
संस्कृतानुवादः - पि.चन्द्रकान्त् कुमार्
चरवाणि - ९४४०२१७१६४

# तिरुपतिनगर्यां गीता जयन्ति उत्सवाः

परमपवित्रे मार्गशिरमासे मोक्षैकादशि दिवसे तिरुमल तिरुपति देवस्थानं, हिन्दू धर्म परिषत् एवं इस्कान् संयुक्ताध्वर्ये डिसम्बर् मासे सप्तम दिनाङ्के तिरुपति यस्.वि.हैस्कूल् प्राङ्गणे परमाद्भुतया परमोत्कृष्टतया गीता जयन्ति उत्सवाः सञ्चालिताः। अस्याद्भुतस्य कार्यक्रमस्य गत त्रिमासैः अहर्निशकृषिः कृतमस्ति। तत्कृषेः फलं सहस्राधिक बालबालिकाः पाठशालायाः प्राङ्गणे समूहेण आगत्य परमोत्साहेण गीताजयन्थुत्सवे भागं गृहीताः। गीता जयन्थुत्सवं बहुवैभवतया 'तिरुमल तिरुपति देवस्थानेन निर्वहणं' एतदेव प्रथमवारमितिकथने अतिशयोक्तिर्नास्ति। एतादृशाद्भुतकार्यं निरन्तरचिन्तनं कृत्वा उचित सूचनानि दत्वा प्रथमतः अन्तिम पर्यन्तं विजय पथे चालिताः श्रीबसन्तकुमारमहोदयाः ऐ.ए.एस्., संयुक्तकार्यनिर्वहणाधिकारिः। तस्य निर्देशानुसारं हिन्दूधर्मप्रचार परिषद् कार्यदर्शिः आचार्य के.राजगोपालन् महाभागाः अद्भुतास्यास्यकार्यक्रमस्य सर्वं सिद्धं कृतवन्तः।

भगवद्गीता जीवन गीता। भगवद्गीता भवितव्यं परिवर्तयितुं निर्देशितंदिव्यसन्देशं भवति। भगवद्गीता समस्त मानवजातेः मार्गदर्शिनी अस्ति। कुलातीत, मतातीत, देशातीत, प्रान्तीयातीत सन्देशं ददाति। तिरुमल तिरुपति देवस्थानं विद्यासंस्थाः, अन्य विद्यासंस्थेषु स्थिताः १०,००० बालबालिकाणां द्वारा गीता जयन्त्युत्सवं चालनीयमिति तिरुमल तिरुपति देवस्थानस्य सङ्कल्पः। तदर्थं सर्वं सज्ञीकरणं षष्टम दिनाङ्केरेव पूर्णं जातम्। परन्तु सप्तमदिनाङ्क प्रातःकाले एव वर्षस्यारम्भः जातः। तदापि समस्तभारं श्रीकृष्णभगवदोपरि संस्थाप्य अधिकारबृन्दः रग्रे गतः। ''उष्णकारकः अहमेव, वर्षस्य निवारकः अहमेव, 'वर्षदायकः अहमेव'' इति श्रीकृष्णः



भगवद्गीतायां नवमाऽध्याये एको न विंशतेः श्लोके कथितं विषयं स्मरणं कृत्वा वर्षनिवारणाय प्रार्थनां कृत्वा सर्वे कार्ये संलग्निताः। लघु वर्षबिन्दुभिः सिक्तमपिरगणयित्वा सहस्राधिक छात्राः सरल्यां पाठशाला प्राङ्गणं गताः। तत्र सर्वे परमोत्साहेण गीता जयन्त्युत्सवे आगमनमेव नेत्रानन्दं कृतमस्ति। प्राङ्गणं बहुसुन्दरतयारलंङ्कृताः। छात्रछात्राः स्वनिर्देशित स्थानेषु उपवेशिताः जाताः। गीता जयन्ति कार्यक्रमः प्रायः सार्ध दशवादने प्रारम्भः जातः। तस्मिन् समये सर्वे छात्रछात्राः स्वस्थानेषु उपविष्टाः।

अथ वेदिकोपरि अद्भुततयान्नमय्य कीर्तनानि कलाकाराः गानं कृत्वा भक्तिभावं जागृतवन्तः। कार्यक्रमं श्रीमान् आचार्य के.राजगोपालन् महाभागाः निर्वहणाधिकारितया स्थित्वा सम्यक् चालिताः। कार्यक्रमस्य आगताः इस्कान् प्रतिनिधयः डॉ.वैष्णवांघ्रिसेवकदासः लीलापारायणदासः पूर्वमेव वेदिकामलङ्कृताः। कार्यक्रमस्य आगतेषु श्रीमति साईप्रसन्ना, विशाखपट्टणं, श्रीवेङ्कटेश्वर वेदविश्वविद्यालयस्य कुलपतिः, तिरुमल तिरुपति देवस्थानम् विद्याशाखाधिकारिः, भारतीयविद्याभवनस्य प्रतिनिधिः रामकृष्णमठस्य प्रतिनिधिः, विकासतरङ्गिन्याः प्रतिनिधिः चिन्मयमिषन् प्रतिनिधिरपि सन्ति। गीता सन्देशं श्रावयितुं श्री श्री श्री विद्याशङ्करभारतीतीर्थस्वामिनं आह्वानिताः। मुख्यातिथि सन्देशं प्रदातुं ति.ति.दे. पालकमण्डल्याः अध्यक्षः श्री वै.वि.सुब्बारेड्डि महाभागाः आगताः। विशिष्टातिथिरूपेण चन्द्रगिरेः एम्.एल्.ए.श्री चेविरेड्डि भास्कर् रेड्डि महाभागाः आह्वानिताः। श्री अनिलकुमार् सिंघाल् महाभागाः ऐ.ए.एस्. कार्यनिर्वहणाधिकारिः, ति.ति.दे., श्री ऐ.वि.धर्मारेड्डि महाभागाः संकलित कार्यनिर्वहणाधिकारिः एते गौरवातिथिरुपेण आह्वानिताः।

कार्यक्रमे प्रथमभागतया ब्रह्मकुमारी संस्थायाः प्रतिनिधीनां द्वारा ओंकारध्यानं कारितं वर्तते। अनन्तरं श्रीवेङ्कटेश्वर नृत्यकलाशालायाः छात्राः प्रार्थनां कृताः। तदनन्तरं वेदिकालङ्कृतमहनीयाः ज्योतिप्रज्वलनं कृतवन्तः। ज्योतिप्रज्वलनानन्तरं आचार्य के.राजगोपालन् महोदयः स्वागतं वितीर्य प्रत्येकनाम्ना वेदिकालङ्कृतमहनीयानां सर्वेषां परिचयं कृतवन्तः। अनन्तरं यस्.वि.उन्नत वेदाध्ययनसंस्थायाः प्रत्येकाधिकारिः डॉ.आकेल्ल विभीषणशर्मा महाभागाः सामूहिक गीतापारायणवैशिष्ट्यं वर्णिताः। गीतायाः बहवः मुख्यांशाः ते बोधिताः। तत्सन्देशानन्तरं गीताजयन्त्युत्सवस्य मुख्यघट्टं प्रारम्भं जातम्।



तदेव सहस्राधिक छात्रछात्राः सामूहिकतया भगवद्गीतायाः पञ्चदशोऽध्यायस्य पारायण कार्यक्रमः श्रीवेङ्कटेश्वरवेदविश्व - विद्यालयविद्यार्थिनः रागयुक्ततया गीतायाः श्लोकाः गाते सति तदनुकरणं कृत्वा सर्वे तदेवस्वरे सहस्राधिकबालबालिकाः गीतायाः पारायणं कृतवन्तः। प्रायः दशनिमेषाधिकं प्राङ्गणं सर्वं गीतापारायणोच्चारणेन संपूरितः। सर्वेषां हृदयानि परमानन्दभरितानि जातानि। एवं गीतापारायणपूर्णानन्तरं तदेव







पञ्चदशोऽध्यायस्य सारांशं श्रीमति साईप्रसन्ना महोदया अनेकानेकोपमैः वर्णिता। अस्माकं हृदये अधिष्ठितं पुरुषोत्तमांवगमनमेवाध्यायस्य मुख्योद्देश्यमिति सा वर्णिता। 'भगवतः अवगमनं सर्वेषां सहजतयास्थितं कलेति' तस्याः आशयः। गीतासन्देशं बालबालिकानां विवरणार्थं प्रत्येकतया आगताः श्री श्री श्री विद्याशङ्करभारतीतीर्थस्वामिनः पञ्चदशोऽध्यायस्य सारांशं सर्वेषामवगाहनार्थं सरलतयाविवरणप्रयत्नं कृताः।

पुष्पगिरिपीठस्य अधिपतिरुपेण स्थितानां तेषामागमनं सर्वेषां आनन्ददायकमासीत्। श्री वै.वि.सुब्बारेड्डि महाभागाः स्वमुख्यातिथि सन्देशे हिन्दूधर्मप्रचाराय तिरुमलतिरुपतिदेवस्थानं कङ्कणबद्धमिति, हिन्दूधर्मप्रचाराय स्वकृषिं अधिकतया करिष्यामीति तदर्थमेतदेव गीताजयन्ति महोत्सवः शङ्कारावमिति ते बहुधा उद्घोषिताः। विशिष्ट अतिथयः श्री चेविरेड्डि भास्कर रेड्डि महाभागाः स्वप्रसङ्गे भगवद्गीता सर्वेषां जीवनशैलीविधानं कथयिष्यतीति उक्ताः। एवं सोऽपि पूर्वं तस्मिन्नेव पाठशालायाः प्राङ्गणे विद्यार्थिरुपेण स्थितित्वविषयं संस्मरणं कृतवन्तः। संयुक्त कार्यनिर्वहणाधिकारिः श्रीमान् बसन्त कुमार् महाभागाः गीता जयन्ति उत्सवाः बहुवैभवेन सञ्चालनं स्वात्मानन्दं जनितमिति कथिताः। अनन्तरं इस्कान् प्रतिनिधिः डाँ.वैष्णवांघ्रिसेवकदास महाभागाः स्वप्रसङ्गे जीवने विजयार्थं साधनं भगवद्गीतामार्गमिति, तद्द्वारा सर्वेषामैश्वर्यं, विजयं, असाधारण शक्तिः, नीतिः भवन्तीति, विजयं मास्तिति कथितजनानामपि विजयदायिनी गीतेति सम्बोधिताः। तेषां स्फूर्तिदायकोपन्यासेन छात्रछात्राः बहु प्रेरणां प्राप्योचितरीत्या स्पन्दिताः। इस्कान् संस्थायाः पक्षतः दशसहस्रानां गीताजयन्ति पत्रकाणि प्रदानमपि विशेषः। तत्र गीतायाः विजय सन्देशं Laminate कृत्वा दत्तं वर्तते। विद्यार्थिनः तत्पत्रकं स्वपठन प्रदेशे भित्यां स्थापयित्वा तत्र स्थितं श्लोकं प्रतिदिनं त्रिवारं उच्चरितव्यमिति डां.वैष्णवांघ्रिसेवकदासः स्वकीय सन्देशे कथिताः। छात्राः स्वप्रदत्तं पत्रकं दर्शयित्वा छायाचित्राणि गृहीत्वा स्वोत्साहं दर्शिताः। रामकृष्णमठं प्रतिनिधिः श्री अनुपमानन्दस्वामिः स्वसम्भाषणे गीतायोक्तरीत्या सर्वे धैर्येण स्थित्वा सर्वं साधनीयमिति प्रबोधिताः। भारतीयविद्या भवनस्य प्रतिनिधिः श्रीसत्यनारायणराजू महोदयः एवं विकासतरङ्गिन्याः प्रतिनिधिः डाँ नागेन्द्रसाई महोदयौ स्वगीतासन्देशं प्रदत्तौ। अन्ते आदित्यरामः स्वयं लिखित्वा, स्वरित्वा गानं कृतः



गीतासन्देशगीतं रिकार्ड द्वारा श्रावितवन्तः। अनेन गीताजयन्ति कार्यक्रमः समाप्तं गतः। वेदिकालङ्कृत महनीयानां स्वामूल्य सन्देशं भाषणात्परं श्रीबसन्तकुमार महोदयः स्वयं तान् श्रीस्वामिनः प्रसादेन सम्यक् पीताम्बरेण सम्मानयित्वा लड्डू अपूपप्रसादेनसंतुष्टिं दत्तवान्। सर्वेषां तत्प्रसादं आनन्ददायकमासीत्। तदनन्तरं कार्यक्रमं विजयेन निर्वहणार्थं आचार्य के.राजगोपालमहोदयमपि सत्कारं कृतवन्तः। इस्कान् संस्थातः वेदिकालङ्कृतानां महनीयानां गीतासन्देप्रश्नावलिः दिनपत्रिका च प्रदत्तमस्ति।

गीताजयन्त्युत्सवं प्रति आगतानां छात्रछात्राणां तिरुमलतिरुपति देवस्थानपक्षतः एकस्मिन् स्यूते स्वच्छजलकूपिका, बिस्केट् पाकेट् पञ्चदशाऽध्यायस्य श्लोकाः मुद्रितपत्रं, इस्कान् संस्थातः गीताजयन्ती पञ्जीकरणपत्रिकां च प्रदत्तवन्तः। प्रथमतः लघुतया वर्षबिन्दवः पतन्नपि गीतापारायणसमये वातावरणं सानुकूलतया जातम्। आकाशं मेघावृत्तं भूत्वा छात्राणां आतपप्रभावोऽपिनासीत्। सर्वमपि 'श्रीबालाजीपद्मावत्याः आशिषाः इत्येवं भावयित्वा सर्वे गीताजयन्त्युत्सवानन्दं अनुभविताः। मध्याह्ने द्वादशवादनपर्यन्तं येत्कार्यक्रमं श्रीवेङ्कटेश्वर भक्ति चानेल् मध्ये प्रपञ्चव्याप्ततया प्रत्यक्षप्रसारमासीत्। एतादृशं बृहत् कार्यक्रमं आटङ्करहितं कर्तुं सहायतां दत्तवद्भ्यः रक्षकशाखायाः बृन्दस्य जातीयसेवाबृन्दस्य, अन्य संस्थायाः कार्य निर्वाहकाणां कृतज्ञतां विनिवेदिताः। बालबालिकाः सम्यक् अनुशासनेन उपविश्य प्राङ्गणं यथा पूरिताः तथैवानुशासनेन निर्गमनंमपि अन्यविशेषः। सर्वेषां हृदयानि तत्समये केवलं गीतया पूरितानि। एवं प्रत्येकव्यक्तौ भगवद्गीतायाः स्फूर्तिपूरितदिनं प्रपञ्चं स्वर्णतुल्यं भवितुं उपकरिष्यति। अतः डाँ.वैष्णवांघ्रिसवेकदासः छात्राणां प्रदत्तं, प्रकीर्तितं भवानपि अन्तिमवाक्यमवगच्छतु! भगवद्गीता सहाय्येन भविष्यं स्वर्णमयं करोतु।

''विद्यलकेल्ल राजु भगवद्गीता
विजयसंपदलु चेकूर्चेदि भगवद्गीता
विधिरातनु मार्चेदि भगवद्गीता
विजयं वह्ना कट्टबेट्टेदि भगवद्गीता
अंदुके भगवद्गीतनु ओक चेत पट्टुकुंदाम्।
इंकोकचेत विजयपताकान्नि येगुरवेद्दाम्!!''





# भक्तसेवायाम्



नवंबर् २३ २०१९ दिनाङ्के तिरुचानूरु श्री पद्मावती देव्याः समाचरितस्य कार्तीक ब्रह्मोत्सवस्य स्थिरवासरे समाचरिते ध्वजारोहण कार्यक्रमे ति.ति.दे. पालक मण्डलि अध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् ऐ.ए.एस्. अपि भागं गृहीताः।

डिसेम्बर् ८, २०१९ दिनाङ्के तमिलनाडु राष्ट्रस्य प्रमुख वैष्णव क्षेत्रे श्रीरंगे श्रीरङ्गनाथ स्वामिनः आलये ति.ति.दे. पालकमण्डलि अध्यक्षाय श्री वै.वि.सुब्बारेड्डि महोदयाय ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् ऐ.ए.एस् महाभागाय च श्री रङ्गनाथालयाध्यक्षः श्री वेणु श्रीनिवासन् अर्चकाः संप्रदायेन स्वागतं व्याहरन्। अनन्तरं पीताम्बराणि स्वामिनः समर्पितवन्तौ। दर्शनानन्तरं आलयाधिकारिभिः श्री रङ्गनाथ स्वामिनः तीर्थप्रसादाः ति.ति.दे. अधिकारिभ्यां प्रदत्ताः।





डिसेम्बर् १ २०१९ दिनाङ्के तिरुचानूरु श्री पद्मावती मातुः ब्रह्मोत्सवेषु अन्तिम दिने पञ्चमीतीर्थोत्सव सन्दर्भे मातुः राष्ट्रप्रभुत्वस्य प्रतिनिधित्वेन उपमुख्य मन्त्री नारायण स्वामी पीताम्बराणि समर्पितवान्। अस्मिन् कार्यक्रमे ति.ति.दे. पालक मण्डलि अध्यक्षाः वै.वि.सुब्बारेड्डि दम्पत्यौ भागं गृहीत्वा श्री पद्मावती मातुः कण्ठाभरण तथा पीताम्बराणि समर्पितवन्तः।

तमेव चार्ययन्नित्यं भक्त्या पुरुषमव्ययम्।



Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

## मातुः पंचमीतीर्थम्, चक्रस्नान दृश्यानि



२३-११-२०१९ तः ०१-१२.२०१९ पर्यन्तम् समाचरित
तिरुचानूरु श्री पद्मावती देव्याः वार्षिक
ब्रह्मोत्सव दृश्यमालिका





ति.ति.दे फल पुष्प प्रदर्शन शालायाः प्रारम्भे ति.ति.दे. पालकमण्डलि अध्यक्षः
श्री वै.वि.सुब्बारेड्डि महोदयाः, ति.ति.दे.कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् ऐ.ए.एस्



मातुः सेवायां...



ति.ति.दे. प्रातिनिध्येन पद्मावतीमातुः हरिद्राकुंकुमादि समर्पयितुं गमितः बृन्दः



कला प्रदर्शन दृश्यानि

